## बृहद्विष्णुपुराणीय

# मिथिला-माहात्म्यम्

पं० श्रीअमरनाथशर्म्मणा
हिन्दीभाषायामनुवाद्य
सम्पादितम्

पं० श्रीमहानन्दठक्कुरेण
संशोधितम्

प्रकाशन-विभागः
कामेश्वरसिंह दरभंगा संस्कृत-विश्वविद्यालयः
कामेश्वरनगरम्, दरभंगा:
१९८०

# बृहद्विष्णुपुराणीय
# मिथिला-माहात्म्यम्

पं० श्रीधर्म्मनाथशर्म्मणा
हिन्दीभाषायामनुवाद्य
सम्पादितम्

पं० श्रीमहानन्दठक्कुरेण
संशोधितम्

प्रकाशन-विभागः
कामेश्वरसिंह दरभंगा संस्कृत-विश्वविद्यालयः
कामेश्वरनगरम्, दरभंगा:
१९८०

# भूमिका

उच्चावचेषु जगत्सु स्थावर जङ्गमेषु प्राणिन: श्रेष्ठास्तत्रापि आहार-निद्रा-भय-मैथुनादि तिर्य्यक् साधारणमस्ति। मनुष्याणां हितसाधन ज्ञानेन-प्रवृत्ति: लौकिक-वैदिक पाक यागादिषु भवति। तथैवाहितसाधन ज्ञाना-न्निवृत्ति विषभक्षण लसुन भक्षणादिभ्यो भवति। अतएव ज्ञानञ्च तेषा-मधिको विशेषः इत्युक्तं सङ्गच्छते। हितञ्च सुखमेव सुखं धर्म्मेण जायत इतिजानन्त्येव विद्वांसः। धर्मश्च प्रवृत्तिलक्षणो निवृत्तिलक्षणश्चेति द्विविधः। तत्र प्रवृत्ति लक्षण धर्मे यागादौ पवित्र देशस्यावश्यकतेति विदितमेव विदुषाम्। तत्रार्य्यावर्त्त देशस्य यज्ञिय देशत्वं प्रतिपादितं मन्वादिभि:। आर्य्या-वर्त्तेपि मिथिलायाः पवित्रभूमित्वम्। यत्र गौतम-याज्ञवल्क्यादयो निवसन्तिस्म। तत्रैव निमिवंश्यानां राज्यमासीदिति प्रसिद्धमेवास्ति। तद्वंशे वहवो राजानो जनक इत्यभिधया निमे:शरीरस्य मथ्यमानत्वेन विदेह इत्यपरोनामासीदिति विदितमेव। तद्वंशे सीरध्वजस्य जनक विदेहस्य राज्येऽनावृष्ट्या दुर्भिक्ष्येण पीड़ित प्रजाया दुःखापनोदनाय यज्ञं चिकीर्षोर्भूमि संशोधनार्थं लाङ्गल ग्रहणं कृतवतः भूमेरुत्पन्ना जानकी-सीतेति प्रख्यातमेव। ततः प्रभृति मिथिलाया अत्यधिकं महत्वं संजातम् पश्चाच्च मर्य्यादापुरुषोत्तमस्य दासरथे: श्रीमतो रामस्य शुभागमनेन धनुर्भञ्जनेन पुण्यतीर्थीभूता मिथिला। वेदेपि नाम तस्याः श्रूयते। तन्मूलक तया तत्र विद्वांसो निवसन्तिस्म। अतएव शिष्ट परिगृहीतत्वेन त्रिकालज्ञैस्तत्त्वदर्शिभि:महर्षिभिर्व्यासादिभि: प्रणीतत्त्वेन पुराणेतिहासयो: प्रामाण्यं निर्णीतमस्ति जैमिनीये दर्शने। तत्र पुराणानि वहूनिसन्ति चतुर्ल्लक्ष संख्यकानि श्लोकानित्रिलोके विभक्तानीति च प्रसिद्ध-मस्ति। अतोवृद्धमनु वृहन्नारदीय वृहद्विष्णुपुराणादीनां नामानि स्मृत्यादौ समुपलभ्यन्ते। तत्र वृहद्विष्णुपुराणोक्तं मिथिला माहात्म्यं जीर्ण-शीर्ण पुस्तकममुद्रितं लेखक प्रमादादशुद्धिवहुलं एतद्विश्वविद्यालयीय कुलसचिवस्य परमकर्म्मंठस्य पितामहस्य श्रीमतो जटाशङ्कर शर्म्मणः सकासादानीय कुल-सचिव महोदयेन एतत्पुस्तकस्य प्रतिलिपि करणार्थं हिन्दी भाषायामनुवाद-

करणार्थं च समर्पितम् । प० श्री धर्म्मनाथ शर्मणे । तत्रत्यो विषयः मित्र-वरेणसहालोचितः तत्रग्रन्थे मिथिलायाः पुण्यदेशत्वं सप्तपुरीतोऽप्यधिकपुण्य प्रदत्वमुपवर्णितम् । मिथिलायावहिः परिक्रमणमन्तःपरिक्रमणंवर्णित-मस्ति । कल्याणेश्वर-गिरिजास्थानं-हरिणाक्षी-सिंहेश्वरस्थान-कपिलेश्वर-स्थानानां नामानि समुपलब्धानि । जनकपुरस्थ तड़ागादीनां च वर्णनं धनुःक्षेत्रस्यातिशय पुण्य प्रदत्वं सम्यगुपदर्शितमस्ति । एतद्देशवासिनां च काश्यादिवासतो यत्पुण्यंतदधिकपुण्यं भवतीचोपवर्णितं वर्त्तते ।

अत्रदेशे मृतानां मुक्तिलाभो भवतीति लिखितमस्ति किंवहुनातत्पुस्तक वाचकाः स्वयमेव तेऽनुभविष्यन्ति । एतत्पुस्तक मुद्रणे कृत प्रयत्नाः स्वनाम-धन्याः श्रीमन्तः कुलपति महानुभावा रामकरण शर्म्माणस्तथा कुलसचिवाः श्रीमन्त सठ्क्कुराः महेन्द्रशर्माणोऽधिक धन्यवादार्हाः तथा मम मित्रवरा-श्चाधिक धन्यवादार्हाः येऽहर्निशम् प्राचीन पाण्डुलिपि पुस्तक समुद्धरणे वद्धपरिकरा वार्द्धक्येऽपि युवीयन्ति । किम्वहुनेति ।

**महानन्द ठक्कुरः**

व्या० न्या० वे० सा० आ०

## प्राक्कथन

दड़िभङ्गा सकरी समीपस्थ राघवपुर ग्रामवास्तव्य योगनिष्णात प० कृष्ण प्रसाद ठाकुरक सुपुत्र प. श्री केदार ठाकुर हमर बालसखा परमनैष्ठिक ओ उदारचरित व्यक्ति छथि, जनिक पुत्र स्वनामधन्य डॉ० श्री महेन्द्र ठाकुर, का. सि. द. सं० वि० वि०, दड़िभङ्गा मध्य कुलसचिव पदारूढ़ छथि। हुनका सतत् ई वासना जे जाहि पुण्यक्षेत्र मिथिलामे उत्पन्न भेल छी, ताहि मिथिलाक माहात्म्य नहि जानी, ई केहन दुःखक विषय थिक। अस्तु काल पाबि अकस्मात् अपनहि घरमे प० श्री जटा ठाकुरक सञ्चित पुस्तक-कोषसौं अति जीर्ण-शीर्ण मिथिलाक्षरमे लिखल, 'वृहद्विष्णुपुराण' क मिथिला माहात्म्य प्राप्त कय अति उद्गारसौं आग्रह कयल जे एहि पुस्तकके सर्वसाधारणकेर ज्ञातव्य हेतु प्रतिलिपि कय देल जाय तथा हिन्दी भाषामे अनुवादो कय देल जाय। हुनक स्नेहवश पुस्तकक अवलोकन कयल। साधारण व्यक्तिक लेख द्वारा अक्षराशुद्धि तथा छन्दोक अशुद्धताकें यथासम्भव परिष्कृत कय, हिन्दीक विशेष ज्ञान नहियों रहलाउत्तर अनुवाद कयल। एहि पुस्तकमे विशेषता ई कहल गेल अछि जे–मिथिला अयोध्या तुल्ये नहि; विशेषता ई अछि जे प्रयागादि अनेक तीर्थमे जन्मभरिक वाससौं जे फल होइछ से मिथिलाक परिक्रमामात्रसौं चतुर्वर्ग अर्थ, धर्म, काम, मोक्ष प्राप्त भय जाइछ। विशेष पाठकवृन्द स्वयं एहि पुस्तकके पढ़ि फलभागी होयताह। कारण जे एही पुस्तकमे लिखल अछि जे "यइदं श्रावयेन्नित्यं श्रुत्वावा हृदि धारयेत्" विशेष हमरो परिश्रम तखनहि सार्थक होयत। किमधिकं विज्ञेषु।

*जानकी पञ्चमी*
१६८०

**प० धर्मनाथ झा**
का० सिं० द० सं० विश्वविद्यालय,
दड़िभङ्गा

## सम्मतिः

श्रीमत्या जगज्जनन्याः जानक्याः जन्मभूमिरियं मिथिलेति महत्व मिदमीयं जगत्यां सुप्रसिद्धमेव। यत्र तत्र पुराणेषु मिथिला माहात्म्यं समुपवर्णित मस्ति। परन्तु सर्वोत्कृष्टं मिथिलामाहात्म्यं वृहद्-विष्णुपुराणे समुपलभ्यते। दैवदुर्विपाकादद्यत्वे वृहद्-विष्णुपुराणं दुर्लभम्। परन्तु वृहद्-विष्णुपुराणस्यायं मिथिलामाहात्म्यांशो हस्तलिखितेः कामेश्वरसिंह दरभंगा संस्कृतविश्वविद्यालयस्य कुलसचिव पदमलङ्कुर्वाणेन डॉ० महेन्द्र ठक्कुरेण पितामहानां श्रीजटाशङ्कर ठक्कुराणां पुस्तकालयादानीय सम्पादनार्थं प० श्री धर्मनाथ झा महाशयेभ्यः समर्पितम्। एभिश्च हिन्दीव्याख्यया विभूष्येदं मिथिला-माहात्म्यं साधु सम्पादितम्।

एतस्य प्रकाशनं यदि स्यान्नूनमसंस्कृतज्ञा अपि मिथिलाया महत्त्वं स्फुटं जानीयुः।

कुलानन्द मिश्रः
भू० पू० दर्शन विभागाध्यक्षः,
का० सिं० द० सं० विश्वविद्यालयः,
दड़भङ्गा।

॥ ओंनमोरामचन्द्राय ॥

मैत्रेय उवाच ।

श्रुतंत्वत्तो मयासर्व्वं, रहस्यं जानकीपतेः ।
अयोध्यायाश्च माहात्म्यं, तत्रावासफलंतथा ॥ १ ॥

इदानीं श्रोतुमिच्छामि, रामन्तत्त्व विवेकिनम् ।
जानक्यास्तत्व सर्व्वस्वं, यथावेदेषुवर्णितम् ॥ २ ॥

पराशर उवाच ।

सीतारामात्मकं सर्व्वं सर्व्वकारण कारणम् ।
अनयोरेकतातत्त्वं गुणतोरूपतोपि च ॥ ३ ॥

तत्पदं रामइत्युक्तं जानकी भावरूपिणी ।
तयोरैक्यं भवेत्तत्वमिति वेदविदो विदुः ॥ ४ ॥

तत्वतो मन्त्रतो वापि रूपतो गुणतोऽपि वा ।
न पृथग् भावना यस्य स ज्ञेयो भावुकोत्तमः ॥ ५ ॥

---

जानकीपति श्री रामचन्द्रजी की सभी रहस्यपूर्ण बातें, अयोध्या का माहात्म्य और वहाँ वास करने का फल आपसे मैंने सुना ॥१॥

अभी भक्तपरायण श्रीरामचन्द्रजी तथा श्रीसीताजी की वेदवर्णित सभी कथायें सुनने की प्रवल इच्छा है ॥२॥

ऋषिवर परासरजी बोले ।

सीताराम सभी कारणों के कारण हैं । इन दोनों में रूप और गुण बराबर है ॥३॥

तत्पद राम कहे गये हैं और जानकी तो भावरूपिणी हैं ही; दोनों का वर्णन किये हैं ॥४॥

तत्त्व से, मन्त्र से, रूप से और गुण से इन दोनों में भेद की भावना जिनको नहीं है; उनको भावुकों में श्रेष्ठ समझना चाहिये ॥५॥

एवमेव मया पृष्टो वशिष्ठो मांसमादिशत् ।
यथा-तंपृच्छतः प्राह तत्समासेन मे शृणु ॥ ६ ॥

रामान्न मैथिली भिन्ना मैथिल्यानरघूत्तमः ।
द्वयोरैक्यं विजानीया त्तद्वतो नैवरूपतः ॥ ७ ॥

द्वयोर्न्नित्यं द्विधारूपं तत्त्वतो नित्यमेकता ।
राममन्त्रे स्थिता सीता सीता मन्त्रे रघूत्तमः ॥ ८ ॥

यतो वर्णात्मको रामः सीता मात्रात्मिका स्थिता,(भवेत)
यद्वा शब्दात्मकोरामः सीता शब्दार्थरूपिणी ॥९ ॥

यद्वा वर्णोभवेत्सीता रामः शब्दार्थ रूपवान् ।
एवमेव विधानेन यथा सूर्य्ये प्रभास्थिता ॥ १० ॥

रत्ने मौल्यं नृपेकीर्त्तिस्तथारामेस्थितातु सा ।
जानक्यां राघवोप्येव मद्वैधेन सदास्थितः ॥ ११ ॥

---

सभी बातें जानने के लिये ऋषिवर वशिष्ठजी से पूछने पर वशिष्ठजी ने मुझे जैसा समझाया, संक्षेप में मुझसे सुनिये ॥६॥

श्री रामचन्द्रजी सीता से भिन्न नहीं हैं और श्री सीताजी रामजी से भिन्न नहीं हैं; दोनों को एक समझना चाहिये, सिर्फ रूप से ही नहीं ॥७॥

दोनों अविनाशी हैं, दोनों का अलग-अलग रूप है; पर दोनों को एक समझना चाहिये। राममन्त्र में सीताजी और सीतामंत्र में रामजी विराजमान् हैं ॥८॥

वर्णात्मक राम हैं तो मात्रात्मिका सीता हैं। अगर शब्दात्मक राम हैं तो अर्थरूपिणी सीताजी हैं ॥९॥

अगर वर्णरूपा सीताजी हैं तो शब्दार्थरूप रामजी हैं। जिस प्रकार सूर्य्य में तेज है उसी प्रकार राम में सीताजी हैं ॥१०॥

जैसे रत्न में मौल्य है, राजा में कीर्त्ति है वैसे राम में सीताजी स्थित हैं और सीताजी में श्री रामजी सदा स्थित रहते हैं ॥११॥

राममैक्यं द्वयोरेव वेदज्ञैः परिनिष्ठितम् ।
यथायोध्यापुरी नित्या मिथिलापि तथास्मृता ॥ १२ ॥

सर्व्वैस्वर्य्य गुणैर्व्वापि नायोध्यातः पृथग्मता ।
अयोध्यका यथा नित्या सर्व्वमङ्गलरूपिणी ॥ १३ ॥

तथैव मैथिलाः सर्व्वे सर्व्वमङ्गल विग्रहाः ।
नित्यभूताः सदाशुद्धाः पुनरावृत्ति वर्ज्जिताः ॥ १४ ॥

नित्यानन्द रसास्वाद रूपिणो रामपार्षदाः ।
श्रीरामाराधकानाञ्च निरासार्थम्विशेषतः ॥ १५ ॥

मिथिला सर्वथा शक्त्या यथायोध्या तथाहिसा ।
निष्कामानां सकामानां ज्ञानानां ज्ञान शालिनाम् ॥ १६ ॥

कथञ्चित्तत्र चेद्वास उद्धारायभवेदलम् ।
तत्र यात्रा महापुण्या सर्व्वकाम समृद्धिनी ॥ १७ ॥

---

दोनों में एकता ही वेद जाननेवालों से कही गयी है। जिस तरह अयोध्यापुरी नित्या और निर्मला है, उसी प्रकार मिथिलापुरी भी अविनाशिनी है ॥१२॥

सभी गुणों से और ऐश्वर्यों से परिपूरिता है अर्थात् अयोध्यापुरी से पृथक् नहीं समझना चाहिये। अयोध्यापुरी जैसे अविनाशिनी है, सर्वमङ्गल-रूपिणी है ॥१३॥

वैसे सभी मिथिलावासी सभीमङ्गलवान हैं, नित्य हैं, शुद्ध हैं और मुक्त हैं याने आवागमन से निवृत्त हैं ॥१४॥

राम के भक्त विशेष रूप से विषय-वासना निवृत्ति करने के लिये राम के पार्षद लोग सदा आनन्द रसास्वाद लेनेवाले होते हैं ॥१५॥

मिथिला सर्वथा शक्तिशालिनी है। जिस तरह अयोध्यापुरी है उसी तरह मिथिला भी है। निःकामियों,सकामियों, ज्ञानियों, ज्ञानशालियों—सभी के लिये बराबर है ॥१६॥

किसी तरह मिथिला में वास किये तो उद्धार के लिये अन्य यत्न व्यर्थ है। मिथिला के लिये यात्रा पुण्यवती है और सभी कामों को देनेवाली है।१७।

एवं रहस्यं तत्वस्य वर्णयन्ति मनीषिणः।
द्वयोर्न्नाम द्वयोर्द्धाम द्वयोस्तत्वं द्वयोर्व्रतम् ॥ १८ ॥

द्वयोराराधनानाञ्च द्वयोः प्रीतिकरंसमम्।
इतियेषान्नचेद्भाव स्ते नराः पापभागिनः ॥ १९ ॥

संसारेषु निमज्जन्ते स्वकर्म्म परिवञ्चिताः।
वशिष्ठेन समाख्याता त्वत्प्रीत्या वर्णितम्मया ॥ २० ॥

सिद्धान्त वीजमपरं शृणुष्वैकमना मुने।
सर्व्वाधारं जगन्मूलं सर्व्वकारण कारणम् ॥ २१ ॥

वेद वेदान्त सिद्धान्तं यत्तत्प्रणव रूपकम्।
अनादिमध्य निधनं व्यपदेश्य गुणैः परम् ॥ २२ ॥

वहिरन्तश्च निःस्यूत मवाङ्मनसगोचरम्।
अनादिमध्य निधनं व्ययदेश्यगुणैः परम् ॥ २३ ॥

---

इस प्रकार तत्त्व का रहस्य और इन दोनों का नाम, धाम, व्रत, आराधना का भी पण्डित लोग वर्णन करते हैं ॥१८॥

दोनों की आराधना प्रीतिकर होती है। ऐसी भावना जिसमें पैदा न हो तो वह मनुष्य पाप-भागी होता है ॥१९॥

अपने-अपने कर्म्म से जो वञ्चित रहते हैं वे संसार ही में भटकते रहते हैं। ये बातें वशिष्ठजी की कही हुयी आपकी प्रीति के लिये वर्णन कर चुका हूँ ॥२०॥

और भी सिद्धान्त-कथायें एक मन से सुनिये। वे सबों के आधार हैं, संसार के निमित्त कारण हैं, सभी कारणों के कारण हैं ॥२१॥

वेद-वेदान्त के सिद्धान्त से प्रणवस्वरूप हैं, अनादि हैं और गुणों से परे हैं ॥२२॥

बाहर भीतर से सभी में व्याप्त और वचन तथा मन से अगोचर है। जो आदि-मध्य अन्त से रहित है कहे गये विशिष्ट गुणों से परे है ॥२३॥

निष्कलं निष्प्रतिद्वन्द्वं निर्व्विकारं निरञ्जनम् ।
सत्तामात्रं परंब्रह्म सदसत्परमेव यत् ॥ २४ ॥

विद्यावन्तो महात्मानः स्वस्वतर्कानुसारतः ।
निरूपयन्ति यत्किञ्चित् स्वस्व ग्रन्थेषु तान्त्रिकम् ॥ २५ ॥

तदव्यापकस्यरूपस्य निर्गुणस्यपरात्मनः ।
प्रभावात्कारणंराम इतिनारद सम्मते ॥ २६ ॥

तच्छक्तिर्ज्जानकीरूपा तेनाभिन्ना महामुने ।
सूक्ष्ममज्ञान सर्व्वस्व मितिज्ञात्वाविमुच्यते ॥ २७ ॥

ज्ञानस्यैषापराकाष्ठा सर्व्वभावज्ञ सम्मतिः ।
समाप्तिरत्रग्रन्थानां वाच्यवाचक सम्पदाम् ॥ २८ ॥

एतावद्वेद सर्व्वस्व मेषावै ब्रह्म सम्मतिः ।
यदनेन प्रकारेण सीतारामौहृदिन्यसेत् ॥ २९ ॥

---

अवयवों से रहित है और विरोधी से रहित है और निर्विकार है और सभी दुःखों से रहित है । सत् स्वरुप परब्रह्म है, सत असत से भिन्न है ॥२४॥

विद्वान महात्मा लोग अनेक शास्त्र को लिखनेवाले अपने-अपने तर्क के अनुसार अपने-अपने ग्रन्थों में जो कुछ निरुपण करते हैं ॥२५॥

उन व्यापक निर्गुण परमात्मा का जो रूप है उसके प्रभाव से सभी का कारण राम हैं यह नारदजी की सम्मति है ॥२६॥

उस परमात्मा की शक्ति जानकीरूपा है इसलिये हे महामुने श्री रामजी से जानकीजी अभिन्ना हैं और जड़ सूक्ष्म पञ्चभूतादि ये अज्ञान सर्वस्व है यह जानकर संसार से मुक्त होते हैं ॥२७॥

शब्द और अर्थ रूपसम्पदा से पूर्ण ग्रन्थों की इन्हीं में समाप्ति अर्थात् पूर्णता है, इसलिये सभी भावज्ञों ने इन्हें ज्ञान की परमकाष्ठा ( सीमा ) मानी है ॥२८॥

यही ज्ञान की पराकाष्ठा है और वेदों की सम्मति है जो इस प्रकार सीताराम को हृदय में रखते हैं वही भक्त हैं ॥२९॥

सीतारामौ स्वयं धर्मी सीतारामौ स्वयंप्रभुः ।
सीतारामौ जगद्बीजं सीतारामौ स्वयंजगत् ॥ ३० ॥

सर्वेषां साधकानाञ्च यदर्थम्वै परिश्रमः ।
लक्षणैर्वहु मिल्लक्ष्यौ सीतारामौगतिः सताम् ॥ ३१ ॥

ज्ञानस्यैषा पराकाष्ठा विज्ञानस्याश्रयःपरः ।
विज्ञायैता प्रयत्नेन कृतकृत्यो भवेन्नरः ॥ ३२ ॥

*इतिश्रीबृहद्विष्णु पुराणे त्रयोदशोऽध्यायः ।*

मैत्रेय उवाच ।

एतद्रहस्यमतुलं विज्ञानं जानकीपतेः ।
पुनर्विस्तरतः किञ्चिछ्रोतु मिच्छामितत्वतः ॥ ३३ ॥

स्वरुपंनामच व्यक्तं चरित्रञ्चापि विश्रुतम् ।
केषाञ्चिदपि लोकेस्मिन् केपुशङ्कानविद्यते ॥ ३४ ॥

---

सीताराम स्वयं धर्मों का आश्रय हैं और स्वयं प्रभु हैं । सीताराम संसार के कारण हैं और स्वयं संसार स्वरूप हैं ॥३०॥

जिस लिए सभी साधकों का परिश्रम है, और सभी लक्षणों का लक्ष्य सीताराम ही हैं । अतः सीताराम ही सज्जनों की गति है ॥३१॥

वही ज्ञान की पराकाष्ठा है और विज्ञान का आश्रय है । इसको यत्न-पूर्वक समझकर मनुष्य कृतकृत्य हो जाता है ॥३२॥

मैत्रेयजी बोले ।

वह रहस्य अतुलनीय जानकीपति रामचन्द्रजी का फिर विस्तारपूर्वक यथार्थतः सुनने की इच्छा है ॥३३॥

उनका स्वरूप उनका नाम उनका चरित्र सुन चुका हूँ किन्तु इस लोक में सुनकर किसे शङ्का न होती ॥३४॥

परन्त्वयोध्ययाबुल्या मिथिलावर्णितात्वया ।
तस्या विस्तार व्यायाम स्वरूपाणि वदस्वमे ॥ ३५ ॥

तस्यां यात्रां कथंकाले कार्य्या सर्व्वैर्मुमुक्षुभिः ।
केदेवास्तत्र वैसन्ति, तेषां नामानिमेवद ॥ ३६ ॥

पराशर उवाच ।

गङ्गा हिमवतोर्म्मध्ये नदीपञ्चदशान्तरे ।
तैरभुक्तिरितिख्यातो देशः परमपावनः ॥ ३७ ॥

कौशिकी कमलाचैव तथाविश्ववतीमता ।
यमुनाचेति विख्याता भूयसी गैरिकातथा ॥ ३८ ॥

जलाधिकाद्वागमती तथाव्याघ्रमतीमता ।
विरजा गण्डलाचैव तथैवेक्ष्वावतीति च ॥ ३९ ॥

लक्ष्मणा वाग्मती ख्याता गण्डकीति ततःपरा ।
इतिपूर्व्वक्रमात्प्रोक्तं नदीनामानि दर्शयन् ॥ ४० ॥

---

अयोध्या के समान मिथिला का वर्णन आपने किया पर विस्तारपूर्वक व्यायामादि सभी बातें सुनाइये ॥३५॥

मुमुक्षुलोग किस समय कैसे मिथिला को यात्रा करते हैं और मिथिला में कौन-कौन देवता लोग रहते हैं उनका नाम बताइये ॥३६॥

पराशरजी बोले ।

गङ्गा से हिमालय के बीच पन्द्रह नदियों से युक्त परमपवित्र तीरभुक्ति (तिरहुत) है ॥३७॥

वहाँ पर कौशिकी, कमला, विश्ववती, यमुना, गौरिका विराजमान हैं ॥३८॥

जलाधिका वागमती, व्याघ्रमती, विरजा, गण्डला, इक्ष्वावती नदियाँ भी विराजमान हैं ॥३९॥

लक्ष्मणा, वाग्मती, गण्डकी इत्यादि पूर्वोक्त नदियों का नाम दिखा कर ॥४०॥

अकुक्षिर्वर्त्तिनीचैव जंघा जीवापिकातथा ।
इत्याद्या वहवस्सन्ति नद्योहिमवदुद्भवाः ॥ ४१ ॥
कौशिकीन्तु समारभ्य गण्डकीमधिगम्यवै ।
योजनानि चतुर्विंश व्यायामः परिकीर्त्तितः ॥ ४२ ॥
गङ्गा प्रवाहमारभ्य यावद्धैमवतम्वनम् ।
विस्तारः षोड़शप्रोक्तो देशस्य कुलनन्दन ॥ ४३ ॥
मिथिला नामनगरी, तत्रास्तेलोक विश्रुता ।
पञ्चभिः कारणैः पुण्या, याविख्याता जगत्रये ॥ ४४ ॥
निमिर्न्नाम महाराज, इक्ष्वाको मुनयोनृपः ।
तेनतप्तं तपोघोरं येनख्यातन्तपोवनम् ॥ ४५ ॥
सुवर्णमणिरूपत्वात्पूर्व्वस्मिन्हि तपोवने ।
सुवर्णकाननंनाम, तेनख्याति पथङ्गतम् ॥ ४६ ॥
पुनस्तथैवनगरी निर्म्मिता मिथिलामुने ।
तत्रजातो मिथिर्न्नाम तेनसा मिथिलाभवेत् ॥ ४७ ॥

---

अकुक्षि वर्त्तिनी, जंघा, जीवापिका इत्यादि बहुत-सी नदियाँ हिमालय से उत्पन्न बह रही हैं ॥४१॥

कौशिकी नदी से लेकर गण्डकी नदी तक चौबीस योजन विस्तृत सीमा है ॥४२॥

गङ्गानदी से लेकर हिमालय वन तक विस्तृत सीमा है ॥४३॥

मिथिलानाम की नगरी में रहनेवाले लोग विख्यात हैं और पाँच कारणों से पुण्यवती हैं जो तीनों भुवन में विख्यात है ॥४४॥

इक्ष्वाकु वंश के निमि नाम का राजा तपस्वी जिसने घोर तपस्या वहाँ की । उनके तपस्या के कारण तपोवन ख्यात हुआ ॥४५॥

सोना और मणि से युक्त जो तपोवन सुवर्ण कानन के नाम से यात्रियों ने विख्यात किये ॥४६॥

फिर वही नगरी मिथिला नाम से निर्माण की गयी और वहाँ पर मिथि उत्पन्न हुये । इसीलिये मिथिला नाम पड़ा, चूँकि मिथिमहाराज होने के नाते मिथिला नाम उपयुक्त ही है ॥४७॥

देवरात तपोभूमिः शिवतुष्टिकरीमता ।
यत्र प्राप्तं धनूरत्नं तेन या साम्मवीवभौ ॥ ४८ ॥

पुनः सीरध्वजो राजा स्वर्णलाङ्गल पद्धतौ ।
प्राप्तवां स्तनयायत्र तेनसार्थकरिश्रुता ॥ ४६ ॥

धनुर्य्यज्ञं कृतंपूर्व्वं पुत्रार्थं यत्स्वयम्वरे ।
वित्रोटितं धनुर्य्यत्र रामेणाद्भुतकर्म्मणा ॥ ५० ॥

एतदर्थम्विशेषेण ब्रह्मरुद्रादि देवताः ।
समर्च्चयन्ति यत्नेन, निवसन्ति तरन्ति च ॥ ५१ ॥

मिथिला तैरभुक्तिश्च वैदेही निमिकाननम् ।
ज्ञानक्षेत्रं कृपापीठं स्वर्णलाङ्गल पद्धतिः ॥ ५२ ॥

जानकीजन्मभूमिश्च, निरपेक्षा विकल्मषाः ।
रामानन्दकरीविश्व, भाविनी नित्यमङ्गला ॥ ५३ ॥

---

यह देवरात की तपोभूमि शङ्कर को प्रसन्न करनेवाली है, जहाँपर रत्न-रूप धनुष पाया गया तथा जो तपोभूमि उस धनुष से सुशोभिता हुई ॥४८॥

फिर सीरध्वज नाम का राजा सोना के हल से जोतने पर पृथ्वी से लड़की पाई इसलिए वह भूमि अर्थकरी हुयी ॥४६॥

पुत्रार्थ स्वयम्वर में धनुष-यज्ञ पहले किये; जहाँपर श्रीराम के अद्‌भुत कर्म से धनुष तोड़ा गया ॥५०॥

इसलिये विशेषकर ब्रह्मादि देवता यत्नपूर्वक आराधना करते हैं, निवास करते हैं और तर जाते हैं ॥५१॥

मिथिला और तिरहुति सीता का निमिकानन है और ज्ञान का क्षेत्र है, कृपा का पीठ है और स्वर्णलाङ्गल पद्धति है ॥५२॥

जानकी की जन्मभूमि मिथिला निष्पापा और निरपेक्षा है । यह राम को आनन्द देनेवाली और संसार को भी आनन्द देनेवाली तथा मङ्गलदायिनी है ॥५३॥

इतिद्वादश नामानि यःपठेच्छ्रणुयादपि ।
सप्राप्नुयाद्राघवश्रेष्ठंभुक्तिमुक्तिञ्च विन्दति ॥ ५४ ॥

प्रयागादीनि तीर्थानि सन्ति लोकेषु पुण्यदा ।
परन्तु रामप्राप्त्यर्थं तेषांशक्तिर्न विद्यते ॥ ५५ ॥

इयं सर्व्वप्रकारेण रामतुष्टिकरी ध्रुवम् ।
यथा साकेत नगरी जगतः कारण स्फुटम् ॥ ५६ ॥

तथैवानन्द सर्व्वस्व कारणन्नगरीत्वियम् ।
महर्षयो महाभागा स्त्यक्त्वा सर्व्वं परिग्रहम् ॥ ५७ ॥

निवसन्ति प्रयत्नेन रामाराधन हेतवे ।
विश्वामित्रस्तु पूर्व्वस्यान्दिशिवासं प्रकल्पयेत् ॥५८॥

विभातुके महायोगी दक्षिणे निवसत्यसौ ।
गौतमस्याश्रमं पुण्यं याम्य पश्चिमकोणके ॥ ५९ ॥

---

इन बारह नामों को जो पढ़ते हैं या सुनते हैं, वह रघुकुल-तिलक श्रीरामजी को पाते हैं और भुक्ति-मुक्ति को भी पा लेते हैं ॥५४।

प्रयागादि तीर्थ लोगों में पुण्य देनेवाला है, पर राम-प्राप्ति के लिये, उनमें शक्ति कहाँ ? ॥५५॥

सभी तरह यह मिथिला राम को निश्चय प्रसन्न करनेवाली है जैसा कि साकेत नगरी संसार का कारण स्पष्ट है ॥५६॥

उसी तरह यह नगरी आनन्दरूपिणी है। इसलिए महर्षि लोग तथा श्रेष्ठजन सभी परिग्रहों को छोड़कर ॥५७॥

राम आराधना के लिए यत्नपूर्वक वास करते हैं। विश्वामित्रजी महाराज मिथिला के पूरब तरफ वास बनाये ॥५८॥

विभातुक नामके महायोगी का दक्षिण तरफ निवास है। दक्षिण-पश्चिम कोण में गौतम मुनि का पवित्र स्थान है ॥५९॥

निवसंत्युद्दजं कृत्वा वाल्मीकिस्तत्र पश्चिमे।
उत्तरे याज्ञवल्क्यस्तु निवासे मितरस्सदा ॥ ६० ॥

एवमेव प्रकारेण वसन्त्यन्य महर्षयः।
सनदी मातृकोदेशः दुर्भिक्षाभिर्विवर्जितः ॥ ६१ ॥

धनधान्य समायुक्तो वनागम समन्वितः।
प्रसस्त नरनारीक आधिव्याधि विवर्जितः ॥ ६२ ॥

सदाम्रवन सम्पन्ना नदीतीरेषु संस्थिताः।
तीरेषु भुक्ति योगेन तैरभुक्ति रितिस्मृता ॥ ६३ ॥

हिमालयस्यवासार्थं मुनिभिः परिरञ्जितः ।
राजानश्च महाभागा ज्ञानविज्ञान दर्शनाः ॥ ६४ ॥

जीवन्मुक्ता विदेहाश्च, देहवन्तो विकल्मषाः।
अनुष्ठितारो यज्ञानां ब्राह्मणा परिपूजकाः ॥ ६५ ॥

---

वाल्मीकि जी पश्चिम दिशामें पर्णशाला बनाकर रहे एवं उत्तर दिशामें याग्यवल्क्य की कुटी है ॥६०॥

इसी प्रकार से और भी महात्मा लोग निवास करते हैं। इस देश में दुर्भिक्षता नहीं है क्योंकि यह नदीप्रधान देश है ॥६१॥

यह देश धन-धान्य से परिपूरित है, फल-फूलों से समन्वित है, प्रसस्त नर-नारी से युक्त है और आधि व्याधि विवर्जित है ॥६२॥

यह मिथिला सदा आम्रवन से सम्पन्न नदी-तट पर स्थित है। तीर में भोग के कारण तिरहुति कहलाता है ॥६३॥

हिमालय वास के लिये मुनिलोग, राजालोग, श्रेष्ठलोग लालायित रहते हैं। ज्ञान-विज्ञान को देखनेवाले वास करने के लिये उत्कण्ठित रहते हैं ।६४।

पाप से रहित देहधारी भी ब्राह्मण यज्ञ और पूजन करने से जीवन्मुक्त हो जाते हैं ॥६५॥

निमिवंश्या ऋषिप्राज्ञा एवन्तत्र महामुने ।
अन्यत्किंयत्र सावित्री गौरीश्रीदेवशक्तयः ॥ ६६ ॥

निवसन्ति प्रयत्नेन सर्वसिद्धि प्रदायिकाः ।
यत्र साक्षात्स्वयं भूमौ सीतासर्व्वेश्वरेश्वरी ॥ ६७ ॥

आविर्भूता विशेषेण श्रेष्ठा राघववल्लभा ।
सर्व्वे देवा महाभागा ऋषयो ब्राह्म्य लौकिकाः ॥ ६८ ॥

आराधयन्ति यां यत्नात् स्वेष्टायाश्च प्रकाम्यया ।
यस्याप्रसादतोन्यत्र कल्पकोटिशतैरपि ॥ ६९ ॥

नप्रीणाति रघुश्रेष्ट स्तपोयोग समाधिभिः ।
अतस्तीर्थेषु सर्वेषु मिथिला पूज्यतेसदा ॥ ७० ॥

मिथिर्येन नमस्यन्ति देशान्तर गताअपि ।
तेषां भुक्तिश्चमुक्तिश्च जायतेनात्र संशयः ॥ ७१ ॥

---

निमिवंश के लोग बड़े ऋषि-मुनि हुए, यहाँ तक कि श्रीसावित्री, श्रीगौरी देव-शक्तियाँ यहीं जन्म ली थीं ॥६६॥

यहाँ यत्नपूर्वक वास करने से सर्वसिद्धि को देनेवाली शक्तियाँ हैं, जहाँपर स्वयं सर्वेश्वरेश्वरी श्रीसीताजी जन्म लीं ॥६७॥

श्रीरामजी की प्रियवल्लभा आविर्भूता हुयीं इसीलिये सभी देवताओं, ऋषियों, ब्राह्मणों, नगरवासियों इष्ट-सिद्धि के लिये यत्नपूर्वक सीताजी की आराधना करते हैं ॥६८॥

उनकी प्रसन्नता से यहाँ के लोग कल्प-कोटि तक निवास करते हैं ॥६९॥

तपयोग समाधि के बल से क्लेश को न पाये । इसीलिये यहाँ सभी तीर्थों में मथिला सदा पूजिता है ॥७०॥

जो मनुष्य देशान्तर में जाकर भी मिथि को नमस्कार नहीं करते, उन्हें भुक्ति-मुक्ति नहीं होती और जो नमस्कार करते हैं उन्हें अवश्य भुक्ति-मुक्ति होती है इसमें कोई सन्देह नहीं है ॥७१॥

तस्मात्सर्व प्रयत्नेन रामस्याराधनन्नरः ।
मिथिलायां वसेत्तत्र त्यक्त्वा सर्व परिग्रहम् ॥ ७२ ॥

*इतिश्रीवृहद्विष्णु पुराणे मिथिला माहात्म्ये चतुर्दशोध्यायः*

मैत्रेय उवाच ।

यानि लिङ्गानि पुण्यानि, यानि वेदोदितानि च ।
तत्र सन्ति महाभाग तेषांनामानि मे वद ॥ ७३ ॥

पराशर उवाच ।

शिलानाथाभिधंलिङ्गं तथा वै कपिलेश्वरम् ।
सर्व्वसिद्धिप्रदं नृणां पूर्व्वद्वारे प्रतिष्ठितम् ॥ ७४ ॥

कूपेश्वरं तथाग्नेये लिङ्गं सर्व्वाघ नाशनम् ।
याम्यां सिद्धिप्रदंलिङ्गं कल्याणेश्वर नामकम् ॥ ७५ ॥

पूर्व्वसिद्धिप्रदंलिङ्गं वारुण्याञ्च जलेश्वरम् ।
सौम्ये जलाधिनाथाख्यं तत्रक्षीरेश्वरंमतम् ॥ ७६ ॥

---

इसलिए सभी प्रयत्नों से मनुष्य मिथिला में निवास करते हुए सभी परिग्रहों को छोड़कर श्रीरामजी की आराधना करें ॥७२॥

मैत्रेयजी बोले ।

वेदकथित वहाँ पर पुण्यवान जितने लिङ्गें हैं उन सबों का नाम मुझे कहिये ॥७३॥

पराशरजी बोले ।

शिलानाथ नाम के लिङ्ग और कपिलेश्वर नाम के लिङ्ग हैं। मनुष्यों को सभी सिद्धियाँ देनेवाले पूर्वद्वार में स्थित हैं ॥७४॥

कूपेश्वर महादेव आग्नेय कोण में सभी पापों को नाश करनेवाले हैं । दक्षिण दिशा में सिद्धि देनेवाले कल्याणेश्वर महादेव विराजमान हैं ॥७५॥

पश्चिम दिशा में जलेश्वर महादेव सभी सिद्धियों को देनेवाले हैं । उत्तर दिशा में जलाधिनाथ महादेव क्षीरेश्वर नाम से प्रसिद्ध हैं ॥७६॥

ऐशान्यां त्रिजगत्ख्यातमन्योवै मिथिलेश्वरम् ।
भैरवाख्यो महादेवो नैऋत्यां ग्रामरक्षकः ॥ ७७ ॥

एवमादीनि लिङ्गानि नैकशः संस्थितानि च ।
योगनिद्रा महामाया तथानगरदेवता ॥ ७८ ॥

गिरिजाद्या महाभागा ख्याताः परमशक्तयः ।
वहूनि पुण्य ख्यातानि तासां नामानि मेश्रृणु ॥ ७६ ॥

पुरन्दरसरः पुण्यं ततोदासरथः सरः ।
भार्गवं मण्डलंचाक्षं विड़ालं रुक्मिणीसरः ॥ ८० ॥

जनकस्यसरः पुण्यं सुनेत्रायाः सरस्तथा ।
वलदेव सरस्तद्वत् गोपालश्च सरोवरम् ॥ ८१ ॥

धनुःक्षेत्रमिति ख्यातं पादप्रच्छालनंसरः ।
विचित्राऽधूतपापा च तथाचुञ्चुमती तथा ॥ ८२ ॥

पयस्विनी कुण्डमती विख्याता तिलदीर्घिका ।
लक्ष्मणाख्या गुणवती तथा विल्ववतीमता ॥ ८३ ॥

---

ईशान कोण में त्रिजग महादेव और मिथिलेश्वर नाम के भी महादेव स्थित हैं। भैरव नाम के महादेव नैऋत्य कोण में ग्राम-रक्षक के रूप में हैं ।।७७।।

ये सभी लिङ्ग एक जगह नहीं हैं। योगनिद्रा, महामाया तथा नगर-देवतायें ।।७८।।

परम शक्तिशालिनी गिरिजा विख्याता हैं। बहुत से विख्यात तीर्थों के नाम मुझसे सुनिये ।।७६।।

पुरन्दर-सरोवर और दशरथ-सरोवर भी पुण्यस्वरूप है। भार्गवसर, मण्डलसर, अक्षसर, विड़ालसर, रुक्मिणीसर सभी पुण्य देनेवाले हैं ॥८०।।

जनकसर तथा सुनेत्रासर पुण्यवान है और बलदेवसर एवं गोपालसर भी पुण्यस्वरूप है ॥८१।।

धनुःक्षेत्र पादप्रच्छालन नाम का सरोवर, विचित्रा, अधूतपापा, चुञ्चुमती नदी पापों को नाश करनेवाली है ।।८२।।

पयस्विनी, कुण्डमती, तिलदीर्घिका विख्याता है, लक्ष्मणा गुणवती तथा विल्ववती भी है ।।८३।।

दीर्घिका महतीपुण्या इष्टदा विघ्नहारिणी ।
मत्स्योदरी व्याघ्रहरी. स्थितिदाच्छत्रहारिणी ॥ ८४ ॥

गोव्रजा चित्रधाराख्या ख्याता पूर्ववतातथा ।
दुर्गया चित्रधारीच तथाखण्डहरी शुभा ॥ ८५ ॥

पुण्या पाकवती ख्याता तथा नगरदेविका ।
सनकादिसरः पुण्यो तरणम्मन्मथः सरः ॥ ८६ ॥

मन्थानं कौशलं चक्रं लोमशं रामसागरम् ।
सप्तवेधाभिधं तीर्थं ध्रुवं गाड़्रमेव च ॥ ८७ ॥

केदार वह्निकुण्डञ्च मध्यमं जानकीसरः ।
कुम्भादिकं वारुणञ्च तथासारस्वतंसरः ॥ ८८ ॥

चतुर्दीर्घिकमाख्याता तथाकष्टहरंसरः ।
धात्री सरो विषहरः विख्यातं मुरलीसरः ॥ ८६ ॥

---

दीर्घिका तीर्थ विघ्न को हरनेवाले, इष्ट को देनेवाले महापुण्यवान बतलाया गया है। मत्स्योदरी, व्याघ्रहरी स्थिति को देनेवाली एवं छत्र को हरनेवाली है ॥८४॥

गोव्रजा और चित्रधारा भी विख्याता है। दुर्ग जो चित्रधारी और खण्डहरी शुभ को देनेवाली है ॥८५॥

पुण्य को देनेवाली पाकवती नदी है और नगरदेविका है। सनकादिसर पुण्यवान है और मन्मथसर उद्धार करनेवाला है ॥८६॥

मन्थान, कौशल, चक्र, लोमश, ध्रुव, गाड्डर, रामसागर—ये सात तीर्थ सप्तवेध तीर्थ से प्रसिद्ध हैं ॥८७॥

केदार कुण्ड, वह्नि कुण्ड और मध्य में जानकी सरोवर है। कुम्भादि सरोवर, वारुण सरोवर तथा सारस्वत सरोवर भी है ॥८८॥

चारों तरफ से कष्ट हरनेवाला कष्टहर-सरोवर विख्यात है और धात्री सरोवर विष हरनेवाला तथा मुरली सरोवर भी विख्यात है ॥८६॥

गङ्गासरसमित्युक्तं अङ्गरागाभिधं सरः ।
गौतमस्यसरः पुण्यं वशिष्ठस्यसरस्तथा ॥ ६० ॥

इत्युक्तंसरसान्नाम कूपनामानिमेश्रुणु ।
पुण्यं सैरध्वजंकूपं शतानन्दस्यकूपकम् ॥ ६१ ॥

अक्रूरकूपमित्युक्तं कूपंसैमनकन्तथा ।
विद्याकूपं ज्ञानकूपं इतिलोकेषु विश्रुतम् ॥ ६२ ॥

महाभागवत श्रेष्ठ वर्णिता ये जलाश्रयाः ।
तेषां स्नानेनपानेन महापुण्यं फलम्भवेत् ॥ ६३ ॥

पुण्यातिरेकतोलभ्या मिथिलाजायतेसताम् ।
तेषां यात्रामहाभाग तत्रकोणेषु सूरिभिः ॥ ६४ ॥

क्रियते परयाभक्त्या पुराणेषु विनिश्चितम् ।
मण्डलानां परासश्च मिथिलायां प्रशास्यते ॥ ६५ ॥

---

गङ्गा सरोवर, अङ्गराग सरोवर, गौतम सरोवर, वशिष्ठ सरोवर सभी पुण्य देनेवाले हैं ॥९०॥

सरोवर सबों के नाम बतला चुके, अब कूपों के नाम सुनिये । सैरध्वज कूप तथा सतानन्द कूप पुण्य देनेवाले हैं ॥६१॥

अक्रूरकूप, सैमनककूप, विद्याकूप, ज्ञानकूप—सभी कूपें लोगों में विख्यात हैं ॥६२॥

जिन जलाशयों का वर्णन किये गये हैं वे सर्वथा श्रेष्ठ हैं और उन जलाशयों के स्नान तथा पान से महापुण्य होता है ॥६३॥

मिथिला जाने से सभी सज्जनों को एक जगह पुण्य प्राप्त हो जाता है । वहाँ की यात्रा की बढ़ावा विद्वानों ने कोने-कोने में की है ॥९४॥

मण्डलों का परास मिथिला में प्रसिद्ध है, उत्कृष्ट भक्ति के लिये पुराणों में कहा गया है ॥६५॥

येनकेन प्रकारेण गमनं सर्व्वं सिद्धिदम् ।
एकाहम्वात्र्यहम्वासो मासिकं वार्षिकन्तथा ॥९६॥

जन्मावधिफलं पुण्यं संसारेऽर्ज्जित पुण्यकम् ।
अटनंसर्व्वतीर्थेषु तत्तदुद्देश्य दैवतम् ॥९७॥

स्नानं दानं तपोहोमस्तर्पणं श्राद्धमेव च ।
द्विजानां भोजनञ्चैव तीर्थसम्पत्तिहेतवे ॥९८॥

परिक्रमापि त्रिविधा वृहतीमध्यमालघु ।
मार्गशीर्षेऽथवामाघे फाल्गुने माधवेपि च ॥९९॥

परिक्रमा प्रकर्त्तव्या नदीमारभ्य कौशिकीम् ।
ब्रह्मचर्य्य विधानेन हविष्याशी जितेन्द्रियः ॥१००॥

---

जिस किसी प्रकार से मिथिलागमन सभी सिद्धि को देनेवाला है । एक दिन या तीन दिन या मासभर या सालभर वास करने से जन्मभर वास करने का फल प्राप्त हो जाता है ॥९६॥

जन्म से लेकर सभी कर्म पुण्यद होता है और संसार में सभी पुण्यों को अर्जन करने वाला होता है । सभी तीर्थों में गमन तत्तद्देवता को उद्देश्य करके होता है ॥९७॥

स्नान, दान, तप, होम, तर्प्पण, श्राद्ध सभी कर्मों के फल मिथिलावास से अनायास ही पा जाते हैं । ब्राह्मण का भोजन तीर्थ-सम्पत्ति के लिये है ॥९८॥

मिथिला-परिक्रमा भी तीन प्रकार की बतलायी गयी है—वृहती, मध्यमा और लघु । वह चाहे अगहन महीना या माघ महीना या फाल्गुन महीना या वैशाख महीना हो ॥९९॥

ब्रह्मचर्य्य-धारण से जितेन्द्रिय होकर तथा हविष अन्न खाकर कौशिकी नदी से लेकर परिक्रमा करनी चाहिये ॥१००॥

शुद्ध्यन्ति रामकोभूत्वा भक्तवृन्दैः समन्वितः ।
सिंहेश्वरं शिवंनत्वा ध्यात्वादेव रघूत्तमम् ॥१०१॥

संकल्पमादितःकृत्वा परितः परिप्रक्रमेत् ।
कौशिकीसङ्गमेस्नात्वा सङ्गमेजाह्नवीतटे ॥१०२॥

शालग्रामींलभेय्यावत्तावद्वै पश्चिमाम्मुखः ।
पुनर्हैमवतंप्राप्तः पुनस्तत्कौशिकीतटे ॥१०३॥

नत्वाकामेश्वरंलिङ्गं पुनः सिंहेश्वरम्व्रजेत् ।
समाप्य नियमन्तत्र पुनरायात्स्वमालयम् ॥१०४॥

मनोवाक्कायजं नित्यं पातकञ्चोपपातकम् ।
सर्व्वं नश्यत्ययत्नेन सर्व्वान्कामानवाप्नुयात् ॥१०५॥

प्रीयन्ते पितरस्तस्य प्रीयन्तेतस्यदेवताः ।
प्रीयते राघवोरामः स्वशक्त्या सीतयासह ॥१०६॥

---

यहाँ भक्तों सहित राम होकर शुद्ध हो जाते हैं। सिंहेश्वर महादेव को प्रणामकर, श्रीरामजी का ध्यान करके ही सभी जगह जाना चाहिये ॥१०१॥

संकल्प करके ही परिक्रमा करनी चाहिये। कौशिकी सङ्गम में स्नानकर, गङ्गा-सङ्गम तट पर जाना चाहिये ॥१०२॥

जबतक शालग्रामी नदी न जाएँ तब तक पश्चिमाभिमुख रहना चाहिये। फिर, हिमालय जाकर कौशिकी-तट जाना चाहिये ॥१०३॥

वहाँ से कामेश्वरलिङ्ग को प्रणाम कर फिर सिंहेश्वर जाना चाहिये। वहाँपर नियम-विधि समाप्तकर अपना आलय (घर) आना चाहिये ॥१०४॥

मन से, वचन से, शरीर से पातक और उपपातक सभी नष्ट हो जाते हैं और सभी कामनायें पूरी हो जाती है ॥१०५॥

उनके पितर लोग और देवता लोग सभी प्रसन्न हो जाते हैं एवं सीता सहित श्रीरामजी भी प्रसन्न हो जाते हैं ॥१०६॥

एवंहि वृहतोयात्रा वर्णिता ब्रह्मवादिभिः।
तत्राशक्योजनःकश्चित् पुरीमात्रं परिभ्रमेत् ॥१०७॥

कल्याणेश्वरमारभ्य निविशेद्गिरिजालये।
पुनर्ज्जलेश्वरङ्गत्वा पुनःक्षीरेश्वरं व्रजेत् ॥१०८॥

विश्रम्य च धनुस्थाने पुनः कल्याण पीठके।
अपरश्चाक्लृकी प्रोक्ता मिथिलायाः परिक्रमा ॥१०९॥

प्रलापम्वा विलापम्वा मिथ्याभाषणमेव वा।
असद्वार्त्तादिकं सर्व्वं वर्ज्जयेत्साधकोत्तमः ॥११०॥

पूर्व्वोक्त विधिनासम्यक् ब्रह्मचर्य्यंव्रतेस्थिताः।
रामेनिष्ठा मनोद्गारं मलमूत्राणिचोत्सृजेत् ॥१११॥

अन्यथाचाचरन् मौर्ख्यान्नरःप्राप्नोति किल्विषम्।
प्रयातिवाधमांल्लोकात्रामद्वेषी भवेत्तुसः ॥११२॥

---

इस प्रकार से वृहत्‌यात्रा ब्रह्मज्ञानियों ने बतलायी है। उतना नहीं कर सके तो पुरीमात्र में ही भ्रमण करना चाहिये ॥१०७॥

कल्याणेश्वर से लेकर गिरिजालय (फुलहर) जाएँ, फिर जलेश्वर जाकर क्षीरेश्वर को जाएँ ॥१०८॥

धनुषा स्थान में विश्राम कर फिर कल्याण पीठ को जाएँ। इसके अतिरिक्त औरभी मिथिला की परिक्रमा बतायी गई है ॥१०९॥

प्रलाप, विलाप, मिथ्याभाषण, दुर्वचन आदि सभी उत्तम साधकों को छोड़ देना चाहिये ॥११०॥

मल-मूत्र त्यागकर पूर्वोक्त विधि से ब्रह्मचर्य्य-पालन कर प्रसन्न मन से राम में निष्ठा करनी चाहिये ॥१११॥

अन्यथा-आचरण से मूर्खमनुष्य पाप का भागी होता है अथवा अधम-लोक प्राप्तकर राम के द्वेषी बन जाते हैं ॥११२॥

तस्माच्छुद्ध तनुश्शान्तो भजन्नाम मन्यन्यधीः ।
परिक्रान्तेल्लभेद्भक्तिं लोकमुक्तिंतथापरे ॥११३॥

मध्यमासा भवेद्यात्रा सर्व्वाघौघ निवारिणी ।
तत्राप्यशक्तश्चेत्कश्चित् परिक्रान्तोऽन्तरगृहम् ॥११४॥

गङ्गासागरमारभ्य स्नानयात्रां समारभेत् ।
धनुःक्षेत्रं पुनःस्नात्वा पुरन्दरसरम्व्रजेत् ॥११५॥

कौशलेयसरोगत्वा स्नात्वावै जानकीह्रदे ।
वह्निकुण्डं समागत्य मध्यमं कुण्डमाव्रजेत् ॥११६॥

रत्नसागरमागत्य कौण्डिल्यस्यसरोव्रजेत् ।
अङ्गरागाभिधं तीर्थं गत्वावै साधकोत्तमः ॥११७॥

पुनर्ल्लक्ष्मणकुण्डेतु गत्वा सागरसङ्गमे ।
स्नानादिकं विधायेत्थं लोकपूज्योभवेन्नरः ॥११८॥

---

तस्मात् शुद्धशरीर से, शान्त होकर, एक मन से श्रीराम का भजन करने पर परिक्रमासे भक्तिको लाभ करते हैं और मुक्ति पा जाते हैं ॥११३॥

वह यात्रा मध्यमा कही जाती है किन्तु सभी पापों को हरनेवाली है। उतना भी नहीं कर सकें तो अन्तरगृही कर लेनी चाहिये ॥११४॥

गङ्गासागर से लेकर स्नान-यात्रा करनी चाहिये। धनुष-क्षेत्र में फिर स्नान कर, पुरन्दर-सरोवर जाना चाहिये ॥११५॥

राम-सरोवर जाकर जानकी-सरोवर में स्नान करके वह्निकुण्ड जाकर मध्यम-कुण्ड को जाएँ ॥११६॥

रत्न-सागर आकर कौण्डिल्य सरोवर जाएँ, वहाँ से अङ्गरागतीर्थ जाकर ही उत्तम साधक कहलाते हैं ॥११७॥

फिर लक्ष्मण-कुण्ड जाकर गङ्गासागर जाएँ, वहाँपर स्नान करने से लोक-पूज्य हो जाते हैं ॥११८॥

सर्वसिद्धिमवाप्नोति जनः प्रक्षीण कल्मषः।
तत्रस्नानं महाभागे प्रायश्चित्तमितःपरम् ॥११९॥

तत्राप्यंशक्तः कश्चिच्चेद् गत्वा धर्मञ्च तद्वनम्।
सहायम्वा यथाशक्तिः कुर्य्याद्वामार्गशोधनम्
परिक्रमावतांपुण्यं सोऽप्यवाप्नोत्य संशयः ॥१२०॥

*इतिश्रीवृहद्विष्णु पुराणेपञ्चदशोध्यायः ॥*

परासर उवाच।

कौशलेन्द्रःसरः स्नायान्मार्गमासे विशेषतः।
मार्गेवै मुण्डनं तीर्थं पादप्रच्छालनंसरः ॥१२१॥

रामलक्ष्मणसीतानां सरांसि फलदानिवै।
पौषेऋक्षसरः स्नायात्पूर्णिमायां विशेषतः ॥१२२॥

पुरन्दर सरोमाघे पञ्चम्यां शोभने शुभः।
फाल्गुने पूर्णिमायाञ्च वह्निकुण्डं महाफलम् ॥१२३॥

---

सभी सिद्धियाँ प्राप्त हो जाती हैं और लोग निष्पाप हो जाते हैं। वहाँ पर स्नान कर प्रायश्चित करना चाहिये ॥११९॥

इतना भी नहीं कर सकें तो परिक्रमा करनेवालों को मार्ग सुलभ करके अनायास परिक्रमा करनेवालों का पुण्य लाभ करें ॥१२०॥

पराशरजी बोले।

अगहन महीना रामसरोवर में विशेषकर स्नान करें। उस रास्ते में मुण्डन-तीर्थ और पादप्रच्छालनसर है ॥१२१॥

राम-लक्ष्मण-सीताजी का सरोवर फल देनेवाले हैं। विशेषकर पौषी पूर्णिमा में ऋक्ष-सरोवर में स्नान करना चाहिये ॥१२२॥

माघ महीना में पञ्चमी तिथि को पुरन्दर-सरोवर शुभदायक है। फाल्गुन महीना में पूर्णिमा को वह्निकुण्ड फलदायक है ॥१२३॥

ज्येष्ठ शुक्ल दशम्यान्तु गङ्गातीर्थं विशिष्यते।
आषाढ़स्यान्तिमे स्नायाद्दीर्घिकायाम्विशेषतः ॥१२४॥

श्रावणे बलरामस्य तीर्थं पुण्यमथान्तिमे।
भाद्रे महर्षिपञ्चम्यां स्नातव्यं भार्गवं सरः ॥१२५॥

आश्विने मृतकुण्डस्य स्नानं सर्व्वाघ नाशनम्।
कार्त्तिकेतु चतुर्द्दश्यां स्नातव्यावै पयश्विनीम् ॥१२६॥

एवं सांम्वत्तसरी यात्रा कालेकाले महाफलम्।
विशेषेण महाभाग नवम्यां रामजन्मनि ॥१२७॥

जानकीजन्मवारेवा विवाहे च तथापि वा।
सर्व्वेषां स्नानदानानि महापुण्यप्रदंफलम् ॥१२८॥

कौशिकीं माधवे स्नायान्माघेवै कमलान्तथा।
दुग्धां विल्ववतींमार्गे कार्त्तिके यमुनान्तथा ॥१२९॥

---

ज्येष्ठ शुक्ल दशमी को गङ्गातीर्थ का विशेष माहात्म्य है। आषाढ़ी पूर्णिमा को दीर्घिका नदी में स्नान का विशेष फल है ॥१२४॥

सावन महीना के पूर्णिमा को बलरामतीर्थ पुण्य देनेवाला है। भादव महीना में ऋषि-पञ्चमी को भार्गव-सरोवर में स्नान करना चाहिये ॥१२५॥

आश्विन महीना में मृतकुण्ड का स्नान सभी पापों का नाशक है। कार्तिक चतुर्दशी को पयश्विनी नदी में स्नान करना चाहिये ॥१२६॥

इस प्रकार सालभर की यात्रा समय-समय पर महाफलदायिका है, विशेषकर राम-जन्म नवमी को ॥१२७॥

जानकी के जन्म-दिन में तथा विवाह पञ्चमी को सबों का स्नान-दान महाफल देनेवाला है ॥१२८॥

वैसाख महीना में कौशिकी-स्नान और माघ महीना में कमला-स्नान का विधान है। दुग्धा और विल्पवती स्नान अगहन महीना में और कातिक महीना में यमुना-स्नान का विधान है ॥१२९॥

भूयसीं गैरिकांचैवमाश्विने फलदामता।
भाद्रे जलाधिकापुण्या ज्येष्ठे व्याघ्रवतीतथा ॥१३०॥

विरजा श्रावणे पुण्या मण्डला फाल्गुनेतथा।
इष्टावती तथापौषे चैत्रेवै लक्ष्मणाशुभा ॥१३१॥

वाग्मती फाल्गुनेशस्ता गण्डिकी चापि कार्त्तिकी।
मलमासे विशेषेण गैरिका फलदायिनी ॥१३२॥

चन्द्रसूर्य्योपरागेषु सर्व्वानद्यः शुभावहा।
निष्कामानां विशेषेण नियमोनात्रविद्यते ॥१३३॥

सरांसि पुष्करिण्यश्च मार्गशीर्षे विशेषतः।
चैत्रेवा स्नानतः पुण्या नवम्यां माधवेतथा ॥१३४॥

विशेषेण महाभाग स्नातव्यः पञ्चपर्व्वसु।
पुण्यं सर्व्वेषु योगेषु नात्रकार्य्याविचारणा ॥१३५॥

---

भूयसी और गैरिकातीर्थ आसिन महीना में फलदायक है। भादव महीना में जलाधिकातीर्थ और जेठ महीना में व्याघ्रवतीतीर्थ फल देनेवाला है॥१३०॥

विरजातीर्थ सावन महीना में और मण्डला फागुन महीना में पुण्य देनेवाला है एवं इष्टावती पौष महीना में तथा लक्ष्मणा नदी चैत महीना में शुभ देनेवाली है ॥१३१॥

वाग्मती का विधान फागुन महीना में और गण्डिकी का कातिक महीना में, विशेषकर मलमास में गैरिका तीर्थ का विधान है ॥१३२॥

चन्द्र और सूर्य्यग्रहण के अवसर पर सभी नदियाँ शुभ देनेवाली है। निष्काम व्यक्ति के लिये विशेषकर कोई नियम नहीं है ॥१३३॥

सरोवर और पोखरा अगहन महीना में विशेष फलदायक है। चैत महीना में स्नान से पुण्य होता है और वैशाख महीना में भी नवमी तिथि को स्नान करने से पुण्य होता है ॥१३४॥

विशेषकर पाँच पर्वों में स्नान करना चाहिये, सभी योगों में पुण्य का विधान है। इस कार्य्य में विचार करने की कोई आवश्यकता नहीं ॥१३५॥

